अवैद्याय सकामोऽपि न दद्यात्। तदाह कात्यायनः,—

"नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम्"—इति।

विद्याप्राप्तधनवत् शौर्य्यादिप्राप्तमपि धनमविभाज्यमित्याह सएव,—

"शौर्य्यप्राप्तं विद्यया च स्त्रीधनं चैव यत् स्मृतम्।
एतत्सर्वं विभागे तु विभाज्यं नैव रिक्थिभिः॥
ध्वजाहृतञ्चवेद् यत्तु विभाज्यं नैव तत् स्मृतम्"—इति।

ध्वजाहृतस्य लक्षणं तेनैवोक्तम्,—

"संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम्।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते"—इति।

बृहस्पतिरपि,—

"पितामहपितृभ्यां च* दत्तं मात्रा च यद्भवेत्।
तस्य तन्नापहर्त्तव्यं शौर्य्यभार्य्याधनं तथा"—इति।

शौर्य्यप्राप्तधनस्वरूपं च कात्यायनेन दर्शितम्,—

"आहत्य संशयं यत्र प्रसभं कर्म्म कुर्वते।
तस्मिन् कर्म्मणि तुष्टेन प्रसादः स्वामिना कृतः॥
तत्र लब्धं तु यत्किञ्चित् धनं शौर्य्येण तद्भवेत्"—इति।

पित्रादिद्रव्योपजीवनेन विद्याप्राप्तधनवत् शौर्य्यप्राप्तधनेऽप्यर्जकस्य भागद्वयमाह व्यासः,—

"साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्।

---

* पितामहपितृव्याणां,—इति पा०।

शौर्य्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः"—इति ।

अन्यदप्यविभाज्यमाह मनुः,—

"वस्त्रं पत्त्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते"—इति ।

वस्त्रं धृतं वस्त्रम् । पितृधृतं वस्त्रं पितुरूर्ध्वं विभागे श्राद्धभोक्त्रे दातव्यम् । तथाच बृहस्पतिः,—

"वस्त्रालङ्कारशय्यादि पितुर्य्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्"—इति ।

अन्यानि तु वस्त्राणि विभाज्यान्येव । पत्त्रं वाहनं, पत्त्रं अश्वशिविकादिवाहनम् । तदपि यद् येनारूढं तत्तस्यैव । अनारूढं तु सर्व्वैर्विभाज्यम् । अलङ्कारोऽपि यो येन धृतः, स तस्यैव । अधृतः साधारणोविभाज्य एव,

"पत्यौ जीवति यत् स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते"—इति

तेनैव धृत इति विशेषेणोपादानात् । कृतान्नं तण्डुलमोदनादि । तदपि यथासम्भवं भोक्तव्यम् न विभाज्यम् । उदकं तदाधारः कूपादिः । सोऽपि विषमः पर्य्यायेणोपभोक्तव्यो न मूल्यद्वारेण विभाज्यः । स्त्रियश्च दास्योविषमाः पर्य्यायेण कर्म्म कारयितव्याः । तथाच बृहस्पतिः,—

"एकां स्त्रीं कारयेत् कर्म्म यथांऽशेन गृहे गृहे ।
बह्व्यः समांशतो देया दासानामप्ययं विधिः"—इति ।

पित्राऽवरुद्धास्तु समा अपि न विभाज्याः। तथाच गौतमः। "स्त्रीषु संयुतास्वविभागः"—इति। योग इति श्रौतस्मार्त्ताग्निसाध्यमिष्टं कर्म्म लक्ष्यते। क्षेमः इति लब्धपरिरक्षणहेतुभूतं वहिर्वेदिदान-तड़ागारामनिर्माणादि पूर्त्तं कर्म्म लक्ष्यते। तदुभयं पितृद्रव्यविरोधार्जितमप्यविभाज्यम्। तदुक्तं लौगाक्षिणा,—

"क्षेमं पूर्त्तं यागमिष्टमित्याहुस्तत्त्वदर्शिनः।

अविभाज्ये च ते प्रोक्ते शयनासनमेवच"—इति।

अथवा। योगक्षेमशब्देन छत्रचामरशस्त्रवाहनादिप्रभृतय उच्यन्ते। प्रचारोगृहारामादिषु प्रवेशनिर्गममार्गः। सोऽप्यविभाज्यः। यत्तु उशनसा क्षेत्रस्याप्यविभाज्यत्वमुक्तम्,—

"अविभाज्यं सगोत्राणामासहस्रकुलादपि।

वाप्यं* क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः"—इति।

तत्प्रतिग्रहलब्धक्षेत्रं क्षत्रियासुतेन सार्द्धं ब्राह्मणीसुतेन अविभाज्यमित्येवं परम्।

"न प्रतिग्रहभूर्देया क्षत्रियादिसुताय च"—

इति स्मरणात्। अन्ये मन्यन्ते। वस्त्रादयोऽपि विभाज्या एव। तथाच बृहस्पतिः,—

"वस्त्रादयोऽविभज्यायैरुक्तं तैर्न विचारितम्।

धनं भवेत्समृद्धानां वस्त्रालङ्कारसंश्रितम्॥

मध्यस्थितमनाजीव्यं दातुं तैः कस्य शक्यते।

युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत्॥

---

* याज्यं,—इति ग्रन्थान्तरधृतः पाठः।

विक्रीय वस्त्राभरणमृणमुद्धाह्य लेखितम्।
कृतान्नं वा कृतान्नेन परिवर्त्य विभज्यते॥
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते।
एकां स्त्रीं कारयेत् कर्म्म यथांऽशेन गृहे गृहे॥
बह्व्यः समांशतो देया दासानामप्ययं विधिः।
योगक्षेमवतो लाभः समत्वेन विभज्यते॥
प्रचारश्च यथाऽंशेन कर्त्तव्यो ऋत्विग्भिः सह"—इति।

तेन वस्त्रादीनामविभज्यत्वप्रतिपादकं मनुवचनमुशनोवचनं चानादरणीयम्। तदनुपपन्नम्। विरोधे हि वचनानां विषयव्यवस्थाऽऽश्रयणं युक्तं, न चान्यथाकरणम्। बृहस्पतिवचनानान्तु अधृतवस्त्रादिविषयत्वम्, मन्वादिवचनस्य तु धृतवस्त्रादिविषयत्वम् पूर्वमेवोक्तमिति विषयव्यवस्था घटते इति।

विभागकाले केनचिद्वञ्चितं पश्चादुद्भावितं चेत्, तत्सर्वं समं विभजेयुः। तथाच याज्ञवल्क्यः,—

"अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्ते समैरंशैः विभजेरन्निति स्थितिः"—इति।

समशब्दो विषमविभागनिरासार्थः। विभजेरन्निति बहुवचनेन येन दृष्टं तेनैव न ग्राह्यमिति दर्शयति। मनुरपि,—

"ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किञ्चित् तत्सर्वं समतां नयेत्"—इति।

अपहृतद्रव्यवच्छास्त्रोक्तानतिक्रमेण विषमभागतया* विभक्तमपि

* विषमभागतया,—इति नास्ति का॰ पुस्तके।

समतां नयेत्* । तथाच कात्यायनः,—

"अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत् ।

पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः"—इति ।

एवं च सति वञ्चितद्रव्यस्य पश्चाद् दृष्टस्यैव विभागविधानात् पूर्वं विभक्तस्य पुनर्विभागोनास्तीत्यवगम्यते । यत्तु मनुनोक्तम्,—

"विभागे तु कृते किञ्चित् सामान्यं यत्र दृश्यते ।

नासौ विभागो विज्ञेयः कर्त्तव्यः पुनरेव हि"—इति ।

तद्विभक्तद्रव्यार्जनव्ययकरणादर्वाग्वेदितव्यम् । †अन्योन्यापहृतमित्यादिवचनानां निर्विषयतापत्तेः । अत्रान्योन्यवञ्चने दोषोऽप्यस्ति । तथाच श्रुतिः । "यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते"—इति । अयमर्थः । यो भागिनं भागार्हं भागान्नुदते भागादपाकरोति भागं तस्मै न प्रयच्छतीति यावत् । अथ भागान्नुत्तः एनमपहारकं चयते नाशयति पापिनं करोतीति यावत् । यदि तं न नाशयति, तदा तस्य पुत्रं पौत्रं वा नाशयतीति । यत्तु मनुनोक्तम्,—

"यो ज्येष्ठो विनिकुर्वीत लोभात् भ्रातॄन् यवीयसः ।

सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः"—इति ।

तत्स्वतन्त्रस्यापि ज्येष्ठस्य समुदायद्रव्यापहारे दोषोऽस्ति किमु-

---

* इत्थमेव पाठः सर्व्वत्र । परमयमसमीचीनः पाठः । अत्र कियानपि पाठो भ्रष्टोऽन्यथा जातोवेत्यनुमीयते ।

† अत्र, अन्यथा,—इति भवितुमुचितम् ।

तास्वतन्त्राणां यवीयसामित्येवंप्रतिपादनपरम् । न तु ज्येष्ठस्यैव दोषप्रतिपादनपरम् । अन्यथा स्मृत्या श्रुतेः सङ्कोचापत्तेः । विभक्तानां कर्त्तव्यमाह नारदः,—

"यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत् कार्य्येषु सम्मताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य च"—इति ।

एकस्माज्जाता विभक्ताभ्रातरः परस्परानुमतिमन्तरेण धनसाध्येष्टापूर्त्तादिधर्म्मकारिणो भवेयुः । तथा, धनसाध्यकृष्यादिकर्म्मकारिणो भवेयुः । तथा, विभिन्नोलूखलमुसलादिकर्म्मोपसर्जनद्रव्योपेताः स्युः । तथाच कार्य्येषु भ्रातरो यदि न सम्मताः, तदाताननादृत्य कार्य्यं कुर्य्युः । तथा, विभक्ता भ्रातरः स्वभागान् यदि दद्युर्विक्रीनीयुर्वा, न दद्युर्वा, तत्सर्वं यथेष्टं कुर्युः । यस्मात्ते विभक्ताः स्वधनस्येशाः स्वतन्त्राः स्वामिन इत्यर्थः । यत्तु बृहस्पतिवचनम्,—

"विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये"—इति ।

तदेवं व्याख्येयम् । अविभक्तेषु द्रव्येषु साधारणत्वादेकस्यानीश्वरत्वात् सर्वैरनुज्ञाऽवश्यं कार्य्या । विभक्ते तूत्तरकालं विभक्तसंशयव्युदाससौकर्य्याय सर्वाभ्यनुज्ञा । न पुनरेकस्यानीश्वरत्वेन । अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिध्यत्येवेति । यत्तु स्मृत्यन्तरम्,—

"स्वग्रामज्ञातिसामन्तदायादानुमतेन च ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी"—इति ।

तस्यायमभिप्रायः । तत्र ग्रामानुमतिः,

"प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः" ।

इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते न पुनर्ग्रामानुमतिमन्तरेण व्यवहारो न सिध्यतीति । सामन्तानुमतिरपि सीमाविप्रतिपत्तिनिरासार्थम् । एवं तदनुमतिरपि* विभक्तसंशयव्युदासेन व्यवहारसौकर्यार्थमेव । हिरण्योदकदानमपि विक्रये कर्त्तव्ये सहिरण्योदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्यादित्येवमर्थम्† ।

"स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया‡"—इति

स्थावरविक्रयस्य निषिद्धत्वात् ।

"भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।

तावुभौ पुण्यकर्म्माणौ नियतं स्वर्गगामिनौ"—इति

दानप्रतिग्रहयोः प्रशस्तत्वाच्च । विभागापलापे निर्णयकारणमाह याज्ञवल्क्यः,—

"विभागनिह्नवे§ ज्ञातिबन्धुसाक्षिविलेखनैः‖ ।

विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः"—इति ।

---

* इत्यमेव सर्व्वत्र पाठः । दायादानुमतिरपि,—इति पाठो मम प्रतिभाति ।

† हिरण्योदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्यादित्येवमर्थः,—इति का० ।

‡ स्थावरे विक्रयं कुर्य्यान्न दानमननुज्ञया,—इति श्रा० ।

§ निर्णये,—इति श्रा० ।

‖ राष्ट्रविलेखितैः,—इति का० ।

ज्ञातयः पितृबन्धवः बन्धवस्तु मातुलादयः* । लेख्यं विभाग-पत्रम्। एभिः विभागनिर्णयो ज्ञातव्यः। यौतकैः पृथक्कृतैः† गृहक्षेत्रैश्च। अन्यदपि विभागलिङ्गमाह नारदः,—

"विभागधर्म्मसन्देहे दायादानां विनिर्णयः।
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात् ॥
भ्रातृणामविभक्तानामेको धर्म्मः प्रवर्त्तते।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक् ॥
साचित्वं प्रातिभाव्यञ्च दानग्रहणमेव च।
विभक्ता भ्रातरः कुर्य्युः नाविभक्ताः परस्परम् ॥
दानग्रहणपश्वन्नगृहक्षेत्रप्रतिग्रहाः।
विभक्तानां पृथक् ज्ञेया दान‡धर्म्मव्ययागमाः ॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थिषु।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्" ॥

बृहस्पतिरपि,—

"पृथगायव्ययधनाः कुसीदञ्च परस्परम्।
वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः"—इति।

कुसीदवाणिज्यादिभिर्लिङ्गैर्विभागनिर्णयः साच्याद्यभावे वेदितव्यः। तथा च सएव,—

---

* ज्ञातयः पितृबान्धवामातृबान्धवाश्च,—इति ग्रा॰ स॰।

† पृथक्पञ्चमहायज्ञैः श्राद्धादिभिश्च गृहक्षेत्रैश्च,—इति ग्रा॰।

‡ पाक,—इति ग्रन्थान्तरीयः पाठः समीचीनः।

"साहस्रं स्थावरस्वाम्यं* प्रातिविभागस्य चक्रिणाम्।
अनुमानेन विज्ञेयं न स्युर्यत्र साक्षिणः†"—इति।

साहसादिसाधकलिङ्गान्यपि सएवाह,—

"कुलानुबन्धव्याघातहोढं साहससाधनम्।
स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम्"—इति।

कुलानुबन्धः पूर्वपुरुषैरनुबन्धः। व्याघातः परस्परबोधबला-दपहृतद्रव्यमुच्यते। दर्शनं स्वाम्यात्मनोभोगः‡। परस्परं पृथग्-ग्रहणादेर्विभागलिङ्गत्वमविभक्तेषु निषिद्धत्वेनावगन्तव्यम्। तथा च याज्ञवल्क्यः,—

"भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्"—इति।

साक्षिलेख्ययुक्तिभिर्निर्णयस्याशक्यत्वे,

"युक्तिष्वप्यसमर्थासु शपथैरेनमर्थयेत्"—इति

प्राप्तं दिव्यं निषेधति वृद्धयाज्ञवल्क्यः,—

"विभागधर्मसन्देहे बन्धुयाऽऽह्यभिलेखितैः।
विभागभावना कार्या न भवेद्दैविकी क्रिया"—इति।

कथं तत्र निर्णय इत्याकाङ्क्षायामाह मनुः,—

---

* स्थावरं न्यासः,—इति ग्रन्थान्तरीयः पाठः।

† इत्थमेव पाठः सर्व्वत्र। परन्त्वसमीचीनः। न स्यातां पत्रसाक्षिणौ इति ग्रन्थान्तरीयपाठस्तु समीचीनः।

‡ इत्थमेव पाठः सर्व्वत्र। मम तु, व्याघातः परस्पररोधः बलादपहृतं द्रव्यं होढ़मुच्यते स्वस्यात्मनोभोगः,—इति पाठः प्रतिभाति।

"विभागे यत्र सन्देहो दायादानां परस्परम्।
पुनर्विभागः कर्त्तव्यः पृथक् स्थानस्थितैरपि"—इति।

यत्र सन्देहो युक्तिभिरपि नोपैति, तत्र पुनर्विभागः कर्त्तव्य-इत्यर्थः। यत्तु तेनैवोक्तम्,—

"सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृद्दानं ददातीति त्रीण्येतानि सकृत् सकृत्"—इति।

तद्युक्त्यादिभिर्निर्णीतं शक्तौ सत्यां वेदितव्यम्। स्वयं कृतस्यास-न्दिग्धस्य पुनः प्रवर्त्तको राज्ञा दण्डनीय इत्याह बृहस्पतिः,—

"स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत्।
स राज्ञाऽंशे स्वके स्थाप्यः शासनीयोऽनुबन्धतः"—इति।

अनुबन्धो निर्बन्धनम्॥

॥०॥ इति दायविभागः॥०॥

---

## अथ द्यूतसमाह्वयाख्ये विवादपदे निरूप्येते।

तयोः स्वरूपमाह मनुः,—

"अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः"—इति।

अप्राणिभिः अक्षबन्धशलाकादिभिः। प्राणिभिः कुक्कुटादिभिः। तथा च नारदः,—

"अक्षबन्धशलाकाद्यैर्देवनं जिह्मकारितम्*।
पणक्रीड़ा वयोभिश्च पदं द्यूतसमाह्वयम्"—इति।

---

* जयकारणं,—इति शा०।

अचा पाशकाः। बन्धश्चर्म्मयष्टिका। शलाका दन्तादिमयो दीर्घ-चतुरस्रः। आद्यशब्देन कपर्दिकादयो गृह्यन्ते। तैः पणपूर्व्वकं यद्देवनं क्रीड़नं क्रियते तद्द्यूतं, वयोभिः पक्षिभिः कुक्कटादिभिः वकलाश* उन्मत्तमेषादिभिश्च प्राणिभिर्या पणपूर्व्विका क्रीड़ा क्रियते सा समाह्वय इत्यर्थः। वृहस्पतिरपि,—

"परिगृहीताश्चान्योन्यं पक्षिमेषवृषादयः।

प्रहरन्तो† हृतपणास्तं वदन्ति समाह्वयम्"—इति।

द्यूतस्थानं सभिकेनाधिष्ठितं कार्य्यमित्याह सएव,—

"सभिकाधिष्ठिता कार्य्या तस्करज्ञानहेतवे"—इति।

अथ पक्षान्तरमाह नारदः,—

"अथवा कितवो राज्ञे दत्वा भागं यथोदितम्।

प्रकाशद्देवनं कुर्य्युरत्र‡ दोषो न विद्यते"—इति।

द्यूतसभाऽधिकारिणो वृत्तिमाह याज्ञवल्क्यः,—

"ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।

गृह्णीयात् धूर्त्तकितवादितराद्दशकं शतम्"—इति।

परस्परप्रीत्या कितवपरिकल्पितपणो ग्लहः। तत्र तदाश्रया एकशतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिक-वृद्धिः, तस्मात् कितवात् पञ्चकं शतं सभिकः आत्मवृत्त्यर्थं गृह्णी-

* वकालावान्,—इति का०। मम तु, बकलाश,—इति पाठः प्रति भाति।

† प्रहरन्ति,—इति शा०।

‡ रेवं,—इति का०।

यात्। पञ्चपणाश्रयो* यस्मिन् शते तत् शतं पञ्चकम्। जित-ग्रहस्य(१) विंशतितमं भागं गृह्णीयादिति यावत्। कितवनिवासार्थं शाला सभा, तत्राधिष्ठितः सभिकः। सभापतिस्तु कल्पिताक्षादि-निखिलक्रीड़ोपकरणः तदुपचितद्रव्योपजीवी। इतरस्मादपूर्णशतवृद्धेः कितवाद्दशकं जितस्यास्य दशमं भागं गृह्णीयादित्यर्थः। एवं स्थापि-तस्य सभिकस्य कृत्यमाह सएव,—

"स सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम्।
जितमुद्ग्राहयेत् जेत्रे दद्यात् सत्यं वचः क्षमी"—इति।

यः क्लृप्तवृत्तिर्द्यूताधिकारी राज्ञा धूर्त्तकितवेभ्यो रक्षितः स राज्ञे यथाप्रतिपन्नमंशं दद्यात्। जितं द्रव्यं पराजितसकाशादा-सेधादिना उद्धृत्य जेत्रे दद्यात्। तथा क्षमी भूत्वा द्यूतकारिणां विश्वासार्थं सत्यं वचो दद्यात्। बृहस्पतिरपि,—

"सभिको ग्राहकस्तत्र दद्याज्जेत्रे नृपाय च"—इति।

पराजितकितवानां बन्धनादिना पणग्राहकोभवेत्। पणग्रहणादर्वा-गेव स्वकीयं पणं जेत्रे यथाभागं दद्यादित्यर्थः। तथा च कात्यायनः,—

"जेतुर्दद्यात्स्वकं द्रव्यं जितं ग्राह्यं क्षिपत्तकम्।
सद्यो वा सभिकेनैव कितवात्तु न संशयः"—इति।

यदा सभिको जेत्रे जितं द्रव्यं दापयितुं न शक्तः, तदा राजा दापयेदित्याह याज्ञवल्क्यः,—

---

* इत्थमेव तत्र्वत्र पाठः।

---

(१) स्मृतेर्लक्ष्मृतिरित्यनुशासनात् ग्रहपदेनात्र ग्लह उक्त इति मन्तव्यम्।

"प्राप्ते नृपतितो भागे प्रसिद्धे द्यूतमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु"—इति ।

अन्यथा प्रच्छन्ने सभिकरहिते अतीतराजभागे[१] द्यूते जितं पणं जेत्रे न दापयेदित्यर्थः। अत्र जयपराजयविप्रतिपत्तौ निर्णय-कारणमाह स एव,—

"द्रष्टारो व्यवहाराणां साक्षिणश्च तएव हि ।
द्यूताख्यव्यवहाराणां द्रष्टारस्तु तएव हि"—इति ।

कितव एव राज्ञा नियोक्तव्यः, न तु श्रुताध्ययनसम्पन्न इत्यु क्तलक्षणः। साक्षिणश्च तएव द्यूतकारा एव। विष्णुरपि,—

"कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति* ।
तएव तत्र द्रष्टारस्तएवैषान्तु साक्षिणः"—इति ।

साक्षिणां-परस्परविरोधे राजा विचारयेदित्याह बृहस्पतिः,—

"उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः ।
यदा विद्वेषिणस्ते तु तदा राजा विचारयेत्"—इति ।

कूटद्यूतकारिणो दण्डमाह याज्ञवल्क्यः,—

"राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपाधिदेविनः"—इति ।

कूटैरक्षादिभिरुपाधिभिर्मणिमन्त्रादीनामिति वचनेर्न† ये दि-व्यन्ति तान् श्वपदेनाङ्कयित्वा स्वराष्ट्रान्निर्वासयेदित्यर्थः। निर्वासने विशेषमाह नारदः,—

* कितवा एव तिष्ठेरन् कितवानां भ्रमं प्रति,— इति क्वा० ।

† इत्थमेव पाठः सर्व्वत्र ।

(१) अतीतो राजभागो यस्मात्, तस्मिन्नित्यर्थः ।

"कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः"—इति।

दण्डने विशेषमाह विष्णुः। "द्यूते कूटाक्षदेविनां करच्छेदः, उपाधिदेविनां सन्दंशच्छेदः*"—इति।

अनियुक्तद्यूतकारिणो दण्डमाह नारदः,—

"अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः।
स शतं प्राप्नुयात्कामं विनयश्चैव सोऽर्हति"—इति।

द्यूते विहितं कर्मजातं समाह्वये अतिदिशति याज्ञवल्क्यः,—

"एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये"—इति।

सभिकवृत्तिकल्पनादिलक्षणो धर्मः समाह्वयेऽपि विज्ञेय इत्यर्थः। प्राणिद्यूते प्राणिनां जयपराजयौ तत्स्वामिनोरित्याह बृहस्पतिः,—

"द्वन्द्वयुद्धेन यः कश्चिदवशादमवाप्नुयात्।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः"—इति।

पणपरिकल्पनमपि कृताकृतमित्याह नारदः,—

"परिहासकृतं यच्च यच्चाप्यविदितं नृपे†।
तत्रापि नाप्नुयात् काम्यमथवाऽनुमतं तयोः"—इति।

काम्यः कामः पणः। यत्तु मनुनोक्तम्,—

"द्यूतं समाह्वयञ्चैव यः कुर्यात्कारयेत वा।
तन् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः॥

---

* द्यूते कूटाक्षदेवीनां करच्छेदः प्रशस्यते।
उपाधिदेविनां दण्डः करच्छेद इति स्मृतः,—इति शा०।

† कर्त्तव्यं विदितं त्वया,—इति शा०।

प्रकाशमेतत् तास्कर्यं यद्देवनसमाह्वयौ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत्॥
द्यूतं समाह्वयञ्चैव राजा राष्ट्रे निवारयेत्।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्*॥
कितवान् कुशीलवान् क्रौञ्चान् पाषण्डानपि मानवान्।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात्"—इत्यादि,

तत्सर्वं कूटाक्षदेवनविषयतया राज्ञामध्यक्षसभिकरहितविषयतया वा योज्यम्। अतएव वृहस्पतिः,—

"द्यूतं निषिद्धं मनुना सत्यशौचसुखापहम्†।
अभ्यनुज्ञातमन्यैस्तु राजभागसमन्वितम्॥
सभिकाधिष्ठितं कार्यं तस्करज्ञानहेतुना"—इति।

इति द्यूतसमाह्वयाख्ये विवादपदे निरूपिते।

## प्रसक्तोद्देशक्रमानुरोधेन ऋणादानादिसमाह्वयान्तान्यष्टादशव्यवहारपदानि निरूपितानि।

---

## अथ वृहस्पतिना निरूपितं प्रकीर्णकाख्यं विवादपदमभिधीयते।

तस्य लक्षणभेदौ नारदेन निरूपितौ,—

"प्रकीर्णकेषु विज्ञेया व्यवहारा नृपाश्रयाः॥
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा।

---

* पृथिवीपतौ,—इति ग्रा०।

† धनाप्यहं,—इति का०।

पुनः प्रमाणसम्भेदः प्रकृतीनां तथैव च ॥
पाषण्डनैगमश्रेणीगणधर्मविपर्ययाः ।
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ॥
प्रतिग्रहविलोपश्च लोप आश्रमिणामपि ।
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ॥
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकम्" इति ।

प्रकीर्णके विवादे ये विवादा राजाज्ञोल्लङ्घन-तदाज्ञाकरण-तत्कर्म्मरचणादिविषयास्ते नृपसमवायिनएव । तत्र सत्याचारव्यपेते मार्गे वर्त्तमानानां प्रतिकूलतामाज्ञाय व्यवहारनिर्णयं नृपएव कुर्य्यात्* । एवं वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णमित्युक्तं भवति । तत्र राजाज्ञाप्रतिघातौ विशेषदण्डमाह याज्ञवल्क्यः,—

"न्यूनं वाऽभ्यधिकं वाऽपि लिखेद्यो राजशासनम् ।
पारदारिकचोरं वा मुञ्चतो दण्ड उत्तमः" इति ।

राजदत्तभूमेर्निबन्धनस्य वा परिमाणन्यूनत्वमाधिक्यं वा प्रकाशयद्राजशासनं यो विलिखति, यश्च पारदारिकचोरौ वा गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति, तावुभावुत्तमसाहसं दण्डनीयौ । व्यासोऽपि,—

"न्यायस्थाने गृहीत्वाऽर्थं अधर्मेण विनिर्णयम् ।
करोत्युत्तरकार्य्याणि राजद्रव्यविनाशकः ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्" इति ।

तत्कर्म्मकरणे दण्डमाह याज्ञवल्क्यः,—

* विषयात्तान्नृपसमो नृपो वा कुर्य्यात्,— इति शा० ।
† प्रमापणे,— इति शा० ।

"राजयानासनारोहे दण्डो मध्यमसाहसः" इति ।

कात्यायनोऽपि,—

"राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः ।

अप्रियञ्चास्य यो वक्ता बलं तेषां प्रकल्पयेत्" इति ।

राज्ञः कोशापहरणादौ दण्डमाह मनुः,—

"राज्ञः कोशापहर्त्तृंश्च प्रतिकूलेषु च स्थितान् ।

घातयेद्विविधैर्दण्डैर्हरेत्सर्वस्वमेवच" इति ।

सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तत्तस्य नापहर्तव्यमित्याह नारदः,—

"आयुधान्यायुधीयानां बीजानि कृषिजीविनाम् ।

वेश्यास्त्रीणामलङ्कारान् वाद्यावाद्यानि तद्विदाम् ॥

यच्च यस्योपकरणं येन जीवन्ति कारुकाः ।

सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति" इति ।

ब्राह्मणस्य बधस्थाने मौण्ड्यमाह मनुः,—

"ब्राह्मणस्य बधे मौण्ड्यं पुरान्निर्वासनाङ्कने ।

ललाटे चाभिशस्ताङ्कं प्रयाणं गर्दभेन तु" इति ।

कोपात्परस्परभेदनादौ दण्डमाह याज्ञवल्क्यः,—

"द्विनेत्रभेदिनो राज* द्विष्टादेशकृतस्तथा ।

विप्रचिह्नेन शूद्रस्य जीवतोऽष्टशतो दमः" इति ।

यत्तु स्मृत्यन्तरेऽभिहितम्,—

"द्विजातिलिङ्गिनः शूद्रान् चित्रदण्डेन घातयेत्" इति ।

---

* राजा,—इति पा० ।

तद्वृत्त्यर्थं ब्राह्मणलिङ्गधारणे वेदितव्यम्। ब्राह्मणपीड़ाकारिणो-
दण्डमाह मनुः,—

"ब्राह्मणान् बाध्यमानन्तु कामादवरवर्णजम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेजकरैर्नृपः" इति ।

शूद्राणां प्रव्रज्यादौ दण्डमाह कात्यायनः,—

"प्रव्रज्यावासिनं शूद्रं जपहोमपरं तथा ।
वधेन शमयेत् पापं दण्ड्यो वा द्विगुणं दमम्" इति ।

एवं शास्त्रोक्तमार्ग[१]माह यमः,—

"एवं धर्मप्रवृत्तस्य राज्ञोदण्डधरस्य च।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः" इति।

मनुरपि,—

"एवं सर्वानिमान्राजा व्यवहारान् समापयन्।
व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमाङ्गतिम्" इति ।

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-
व्याख्यायां व्यवहारमाधवः समाप्तः ॥

## समाप्तं चेदं व्यवहारकाण्डम् ॥

## समाप्ता चेयं पराशरस्मृतिव्याख्या ॥

शुभमस्तु । श्रीरस्तु ॥

---

(१) शास्त्रोक्तोमार्गो यस्य राज्ञस्तं प्रतीत्यर्थः ।

# पराशरमाधवस्य शुद्धिपत्रम् ।

(आचारकाण्डस्य)

| पृष्ठे । | पङ्क्तौ । | अशुद्धम् । | | शुद्धम् । |
|---|---|---|---|---|
| ३ | १ | प्रजा ... | ... | प्रज्ञा |
| ३ | १३ | पूर्व्वे ... | ... | पूर्व्वै |
| ४ | २ | सूचितं ... | ... | सूचितं |
| ५ | २५ | स्मृतिष ... | ... | स्मृतिषु |
| ६ | १० | प्रत्येक ... | ... | प्रत्येव |
| ६ | ११ | व्युत्पत्सु ... | ... | व्युत्पित्सु |
| ६ | २४ | दस्य ... | ... | यस्य |
| ७ | ३ | धाय्या संज्ञकौ | ... | धाय्यासंज्ञकौ |
| ८ | १६ | वत्वे ... | ... | वत्त्वे |
| १२ | १७ | न्याय कुसुमा | ... | न्यायकुसुमा |
| १३ | ३ | क्लृप्ति ... | ... | क्लृप्ति |
| १४ | १५ | निर्णायाख्या | ... | निर्णायाख्य |
| १६ | १७ | त्वेष्ठ ... | ... | ज्येष्ठे |
| १८ | १८ | अनिर्व्विष्ठे कणीयान् निर्व्विशम् | | अनिर्विष्टे कणीयाम् निर्विशन् |
| १८ | २१ | महावह ... | ... | मलावह |
| १८ | २३ | मद्विव ... | ... | मद्विध |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २० | २१ | मुक्य ... ... | मुख्य |
| २१ | ६ | नेक ... .. | नैक |
| २१ | १० | ह्यप्र ... ... | ह्यप्र |
| २१ | ११ | ज्ञात्वा ... ... | ज्ञात्वा |
| २१ | १३ | मथ ... ... | यथ |
| २४ | १३ | भुत् ... ... | मुत् |
| २४ | १८ | मणीभिश्च: ... | मणीभिश्च: |
| २६ | ५ | भ्रतं ... ... | व्रतं |
| २८ | ८ | थत् ... ... | यत् |
| २८ | १२ | म्मैन्य ... ... | म्मन्य |
| २९ | ४ | समुचया... ... | समुचेया |
| ३१ | २६ | स्वष्टव्यः ... ... | द्रष्टव्यः |
| ३३ | २ | ब्रास ... ... | ब्राह्म |
| ३४ | २४ | हेतो, ... ... | हेतोः |
| ३६ | ११ | चुरे ... ... | चुरि |
| ३७ | २४ | चित्तम्य ... ... | चित्तस्य |
| ३८ | ६ | भार ... ... | मार |
| ३८ | २४ | पारस्पर्य्यै... ... | पारम्पर्य्यै |
| ३९ | ६ | सञ्जँनी ... ... | सञ्जंनी |
| ३९ | १७ | मच्छिता... ... | मश्छिता |
| ३९ | १९ | (१, सू)... ... | (२ पा० ३ सू०) |
| ३९ | २२ | ममं ... ... | मसं |
| ४० | १४ | भ्रूक्ष ... ... | भ्रून्य |
| ४५ | १६ | देवानाच... ... | देवानाञ्च |
| ४५ | १९ | प्र- ... ... | स- |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| ४६ | ९,१० | (अ०, १ पा०, २ सू०) | | (६ अ०, ८ पा०, २२ सू०) |
| ४८ | २२ | प्र. १, का. १, | ... | प्र०, १ का०, १ |
| ५८ | १३ | धम्म ... | ... | धर्म्मं |
| ६२ | ८ | सव ... | ... | सर्वं |
| ६६ | ५ | याज ... | ... | याज्ञ |
| ९० | १० | भूलत्वेन... | ... | मूलत्वेन |
| ९२ | १ | 'अश्नुतः' | ... | 'अश्नुते' |
| ९४ | ७ | प्यस्त्वेव ... | ... | प्यस्त्येव |
| ९६ | ११ | दहस्य ... | ... | देहस्य |
| १०२ | ८ | चतुर्भुखाय | ... | चतुर्मुखाय |
| ११४ | ६ | निष्कलम् | ... | निष्फलम् |
| ११६ | १४ | योऽम ... | .. | योऽय |
| ११७ | ३ | ये नैताः... | ... | येनैताः |
| ११९ | १४,१५ | जाति-स्त्री, संस्थितः | | स्त्रीर्जाति, संस्थिते |
| १२५ | ९ | षङ्क्ता ... | ... | षड्भक्ता |
| १३५ | ५ | विध तिनां | ... | विधायिनां |
| १४१ | ९ | पाठमात्रेण | ... | पाठमात्रे न |
| १४३ | ७ | मन्वादिके | ... | मन्वादिकं |
| १४५ | १ | तै च ... | ... | ते च |
| १५४ | ६ | राजसनेयि | ... | वाजसनेयि |
| १९० | १५ | अविद्धान् | ... | अविद्वान् |
| २०३ | १६ | वशिष्ट ... | ... | वशिष्ठ |
| २०५ | २४ | पत्तमा... | ... | पञ्चमा |
| २८५ | ६ | अष्टौत्तर | ... | अष्टोत्तर |
| २८६ | ८ | वायुभूतस्य | ... | वायुभूतः ख |

| पृष्ठ। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| २८८ | ४ | तीर्थे .. | ... | तीर्थे |
| २९० | १९ | क्षन् ... | ... | क्षिप् |
| २९२ | १० | कृतादारो | ... | कृतदारो |
| ३०० | १ | गुणोपेतो | ... | गुणोपेता |
| ३०८ | १९ | तेनेवौकम् | ... | तेनैवोक्तम् |
| ३०९ | ७ | वृद्धार्थं... | ... | वृद्ध्यर्थं |
| ३१२ | १५ | भेद ... | ... | भेद |
| ३२७ | १५ | त्रिरन्नाद्दाप | ... | त्रिरन्वाद्दाप |
| ३३३ | १८ | ब्राह्मणे... | ... | ब्रह्मणे (एवं ३३४ पृष्ठे) |
| ३७२ | ८ | उशना:... | ... | उशना (एवमन्यत्र) |
| ३७३ | २५ | शूद्रे ... | ... | शूद्रे |
| ३८२ | १५ | रात्रो ... | ... | रात्रौ |
| ३८९ | २० | क्षिति ... | ... | क्षितिं |
| ३९० | २ | इवरामे... | ... | इवारामे |
| ३९० | ४ | दुष्ठ ... | ... | दुष्ट |
| ३९० | ७ | मांसाञ्जनोच्छिष्ठ ... | | मांसाञ्जनोच्छिष्ट |
| ३९० | २१ | स्वधर्म्माचकिताग ... | | स्वधर्म्माचकितान् |
| ४१८ | १४ | शूश्रूषा ... | ... | शुश्रूषा |
| ४१८ | १७ | शुस्रुषैव ... | ... | शुश्रूषैव |
| ४१९ | १२ | परम् ... | ... | परम |
| ४२१ | ७ | वैय्यं .. | ... | वैश्यं |
| ४३१ | ६ | अन्येन ... | ... | अन्नेन |
| ४३२ | १३ | आयो ... | ... | अयो |
| ४३७ | ३ | चातुर्मास्या | ... | चातुर्मास्य |
| ४६४ | २ | पतिघ्नी "* | ... | पतिघ्नी " |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| ४६४ | ३ | इत्यर्थः ... | ... | इत्यर्थः * |
| ४६८ | १६ | निवृत्तेरभात् | ... | निवृत्तेरभावात् |
| ४७१ | २ | ग्रर्हितम् | ... | गर्हितम् |
| ४८३ | १ | समां ... | ... | मासां |
| ४८४ | १६ | शूद्राणा | ... | शूद्रा |
| ५०० | ७ | न खातां | ... | नाखातां |
| ५०० | १५ | जनितेः.. | ... | जनितोः (एवं परत्र) |
| ५०६ | ११ | सदाऽभ्यर्च्यं | ... | सदाऽभ्यर्च्या |
| ५१४ | ५ | क्षत्रियाश्च | ... | क्षत्रियायाश्च |
| ५२३ | ५ | ध्यानं... | ... | ध्वानं |
| ५२८ | ४ | तर्तये ... | ... | तर्पये |
| ५३० | १० | कुट्टनवद्धननं | ... | कुट्टनमवद्धननं |
| ५३३ | ८ | लोम्य ... | ... | लोम्यं |
| ५४० | ६ | कोशा... | ... | केशा |
| ५४३ | २० | कुठीचरः | ... | कुटीचरः |
| ५४५ | ३ | शमागारं | ... | समागारं |
| ५४८ | ४ | तत्व ... | ... | तत्त्व |
| ५५१ | २ | सखास ... | ... | सखामा |
| ५५१ | २० | दण्डन ... | ... | दण्डेन |
| ५५४ | १४ | विदिदिषु | ... | विविदिषु |
| ५५५ | १३ | नान्यदा | ... | नान्यथा |
| ५५८ | २१ | अनौद्वत्य | ... | अनौद्धत्य |
| ५६० | १२ | शरीर ... | ... | शरीरे |
| ५६४ | २२ | भिक्षाटनसमुद्द्योगात् प्राक् केनापि | | भिक्षाटनमनुद्द्योगात् प्राक् केनाप्य |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| ५७२ | १७ | मृङ्गतः ... | ... | मृङ्गतः |
| ५७३ | १३ | रचन्त ... | ... | चरन्त |
| ५८६ | १८ | यथस्ठो ... | ... | यथेष्ठा |
| ५८७ | १४ | उत्पादका | ... | उत्पादको |
| ६२१ | ११ | ग्रहः ... | ... | ग्रहे |
| ६२४ | १८ | दग्नरात्रसन्निपाते यदाद्यं | | दग्नरात्राः सन्निपतेयुराद्यं |
| ६२४ | १९ | न पूर्व्वाशौच | ... | पूर्व्वाशौच |
| ६४० | २ | सिरस ... | ... | शिरस |
| ६४१ | १२ | आघ्राति | ... | अघ्राति |
| ६४३ | १७ | दर्श ... | ... | दर्शं (एवं परत्र) |
| ६४४ | १५ | करिष्यति | ... | गमिष्यति |
| ६४४ | २१ | हार ... | ... | हारि |
| ६४६ | ४ | तिथियुग्मेषु | ... | तिथ्ययुग्मेषु |
| ६५२ | २१ | देवखातस्व | ... | देवखातस्व |
| ६५३ | १५ | ब्रह्माण्डपुराणोऽपि | | ब्रह्माण्डपुराणेऽपि |
| ६६० | ६ | धनमार्यस्ते | ... | धनमार्यन्ते |
| ६७१ | १० | चण्डिका | ... | चन्द्रिका |
| ६७६ | ३ | विषयत्वागमात् | ... | विषयत्वावगमात् |
| ६७९ | ६ | श्रोतिया | | श्रो त्रया |
| ६९२ | ३ | निर्विष्ठ ... | ... | निविष्ठ (एवं परत्र) |
| ६९९ | ६ | सम्टद्धाऽपि | ... | सम्टद्धोऽपि |
| ६९९ | १३ | द्वा ... | ... | द्वौ |
| ७०३ | १४ | मृङ्गा ... | ... | मृङ्गा |
| ७१२ | १६ | या ... | ... | यः |
| ७१७ | १६ | मासं ... | ... | मांसं |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम् |
|---|---|---|---|---|
| ७२२ | १ | बैजा ... | ... | बैज (एवं परत्र) |
| ७४२ | ५ | द्विधाभवत् | ... | विंधारयेत् |
| ७४४ | ९ | उपनीयं | ... | उपनीय |
| ७४४ | १४ | सर्व्वपात्रेषु | ... | सर्व्वं पात्रेषु |
| ७४४ | २१ | खसत्तादि | ... | खखत्वं वि |
| ७४५ | २ | खसत्तां ... | ... | खखत्वं |
| ७४५ | २१ | पाणिनि | ... | वार्त्तिक |
| ७४६ | १७ | रक्षोघ्नः ... | ... | रक्षोघ्नः |
| ७५० | ७ | उच्छिष्ट ... | ... | उच्छिष्टं |
| ७५० | २२ | षण्मासाम्भ | ... | षण्मासान् भ |
| ७५९ | १६ | उच्छिष्टा | ... | उत्सृष्टा |
| ७७३ | १ | पराङ्क ... | ... | पराङ्के |
| ७७३ | १८ | वाऽप्याग्निमान् | ... | वाऽप्यग्निमान् |
| ७७४ | २० | द्वादशाह | ... | एकादशाह |
| ७८० | ९ | गोलाक्षि | ... | लौगाक्षि (एवं परत्र) |
| ७८२ | ९ | कर्कन्धु ... | ... | कर्कन्धू |
| ७९० | १५ | मातामहानामिति | | मातामहानिति |
| ७९० | २१ | पूरणीयम् | ... | संबन्धनीयम् |
| ७९० | २२ | मातामहये | ... | मातामहयो |

बवयोः पर्यावर्तनं कार्यम् ।

---

# पराशरमाधवस्याकारादिक्रमेण विषयसूची ।

## ( आचारकाण्डस्य )

—०:०—

## अ ।


| विषयः । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|
| अकृतगार्हस्थ्यस्यापि वानप्रस्थाश्रमेऽधिकारः ... | ५२७ | १९ |
| अक्षमालाविधिः ... ... ... | २८४ | १२ |
| अग्नौकरणहोमः ... ... ... | ७३७ | १२ |
| अग्न्याधानम् ... ... ... | १५१ | १३ |
| अङ्गुलिमानम् ... ... ... | ५९५ | १६ |
| अजातदन्तबालानामग्निसंस्काराद्यभावः ... | ६०१ | १७ |
| अजातदन्तादीनामग्निसंस्कारेऽशौचम् ... | ६०४ | १४ |
| अतिथ्यभ्यागतयोर्लक्षणे ... ... | ३५२ | ४ |
| अधिवेदनद्वैविध्यम् ... ... | ५०८ | १५ |
| अधिवेदननिमित्तानि ... ... | ५०७ | ६ |
| अध्ययनाध्यापनप्रकरणम् ... ... | १३६ | १ |
| अध्यापनकालः ... ... ... | १३६ | १६ |
| अध्यापनविधिविचारः ... ... | १३७ | ४ |
| अध्याप्याः ... ... ... | १३६ | ६ |
| अनग्नेः सपिण्डीकरणकालः ... ... | ७७३ | २० |
| अनग्नेर्वैश्वदेवः ... ... ... | ३४० | १७ |
| अनध्यायाः ... ... ... | १४५ | १ |
| अनुदितादिकालानां लक्षणानि ... ... | २८८ | १५ |

| विषयः। | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|
| अनुपनीतमरणेऽतिक्रान्ताशौचाभावः | ... | ५९९ | १३ |
| अनुपनीतस्य कृतचूड़स्यैव पित्रोः श्राद्धेऽधिकारः | | ७९० | १ |
| अनुपनीतस्य धर्म्माः | ... ... | ४४४ | ८ |
| अनुपनीतस्य श्राद्धे वेदमन्त्रपाठविचारः | ... | ७९० | २ |
| अनुपनीतस्याक्षराभ्यासः | ... ... | ४४५ | ३ |
| अनुषङ्गन्यायः | ... ... ... | १०५ | ४ |
| अनौरसपुत्राद्यशौचम् | ... ... | ६११ | ४ |
| अन्तर्वासस आवश्यकत्वम् | ... ... | २४३ | १४ |
| अन्नप्राशनम् | ... ... ... | ४४२ | १९ |
| अन्येऽपि गृहस्थधर्म्माः | ... ... | ५२२ | १३ |
| अपमृत्युहतानां चतुर्दश्यां श्राद्धम् | ... | ६७० | ९ |
| अपूर्व्वस्य फलद्वारत्वविचारः | ... ... | १९७ | १५ |
| अभक्ष्यद्रव्याणि | ... ... ... | ७११ | ३ |
| अभिवादनप्रकरणम् | ... ... | २९६ | ९ |
| अभोज्यान्नाः | ... ... ... | ७१५ | ६ |
| अभ्यङ्गादिनिषेधः | ... ... ... | २६२ | ७ |
| अभ्रातृकाविवाहविचारः | ... ... | ४७४ | १० |
| अयाज्ययाजकलक्षणम् | ... ... | १६४ | १ |
| अर्घ्यपात्राणि | ... ... ... | ७२२ | १ |
| अर्थलोभात् सवर्णशवदाहेऽशौचम् | ... | ६३२ | १८ |
| अर्थलोभादसवर्णशवनिर्हरणाशौचम् | ... | ६३२ | १० |
| अवशिष्टगृहस्थधर्म्माः | ... ... | ५१८ | ११ |
| अविक्रेयद्रव्याणि (ब्राह्मणस्य) ... | ... | ४२१ | १७ |
| अविक्रेयद्रव्याणि (शूद्रस्य) | ... ... | ४२३ | ६ |
| अवेद्याधिकरणम् ... | ... ... | ३९३ | १७ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| अशक्तौ धान्येन तिलविनिमयः ... ... | ४३० | १८ |
| अशौचनिमित्तसन्निपातेऽशौचव्यवस्था ... | ६२१ | १३ |
| अशौचप्रकरणम् ... ... ... | ५७५ | ३ |
| अशौचकालेऽपि दशपिण्डदानम् ... | ६४२ | ३ |
| अशौचापवादः ... ... ... | ५६०<br>६१३ | १३<br>१६ |
| अशौचिनां वापनकालः ... ... | ६४६ | १५ |
| अशौचिसंसर्गे तत्तुल्याशौचम् ... ... | ६२० | ३ |
| अशौचे केषाञ्चिदसङ्कल्पितद्रव्याणामपि शुद्धता | ६२१ | ७ |
| अशौचेन मुख्यकालातिक्रमेऽशौचान्ते श्राद्धम् ... | ६७३ | २ |
| अशौचे सन्ध्यादिकरणविचारः ... ... | ५८० | ६ |
| अष्टकानिरूपणम् ... ... ... | ६५५ | २१ |
| असत्प्रतिग्रहोचितावस्था ... ... | १८५ | ११ |
| असवर्णशवनिर्हरणाशौचम् ... ... | ६३२ | ६ |
| असवर्णाविवाहविचारः ... ... | ४६३ | १६ |
| अस्थिसञ्चयनकालः ... ... | ६४५ | १७ |
| अस्थिसञ्चयने निषिद्धतिथिवारनक्षत्राणि ... | ६४६ | २ |
| अहतवस्त्रलक्षणम् ... ... | ७२४ | ६ |
| अहःशेषकृत्यम् ... ... ... | ३८५ | ६ |


---

## आ।


| | | |
|---|---|---|
| आचमनविधिः ... ... ... | २२० | २ |
| आचमनापवादः ... ... ... | २२६ | ४ |
| आचमने वर्ज्याः ... ... ... | २२८ | ६ |
| आचारकर्म्मणोर्भेदः ... ... | ४२५ | १० |

| विषयः । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|
| आचारनिरूपणम् ... ... ... | १३३ | १ |
| आचारलक्षणम् ... ... ... | १३३ | ६ |
| आचार्य्यलक्षणम् ... ... ... | ३०४ | २१ |
| आतुरव्यञ्जनाशौचम् ... ... | ६३७ | २ |
| आतुरसंन्यासे प्रैषमात्रोच्चारणम् ... | ५३४ | १६ |
| आतुरादिसंन्यासः ... ... ... | ५३४ | ११ |
| आतुराश्वासनानन्तरकृत्यम् ... ... | ६४४ | १९ |
| आतुराश्वासनम् ... ... ... | ६४३ | २२ |
| आदित्यानां नामानि ... ... | ३२१ | १४ |
| आद्यश्राद्धकालविचारः ... ... | ६४७ | १३ |
| आमश्राद्धविचारः ... ... ... | ६७५ | ११ |
| आशौचिनियमाः ... ... ... | ६४५ | ४ |
| आश्रमचातुर्व्विध्यविचारः ... ... | ५२४ | १५ |
| आश्रमचातुर्व्विध्यम् ... ... | ४३६ | ६ |
| आश्रमधर्म्मप्रकरणम् ... ... | ४३६ | २ |
| आश्रमाणां क्रमेणानुष्ठानम् ... ... | ५३३ | ५ |
| आश्रमाणां व्युत्क्रमेणानुष्ठाननिषेधः ... | ५३३ | ८ |
| आश्रमाणां सर्व्वेषामवान्तरभेदाः ... | ५७२ | २ |
| आश्रमाधिकारविचारः ... ... | ४५९ | १४ |
| आसुरादिविवाहोढ़ायाः पत्नीत्वाभावः ... | ७८८ | २ |
| आसुरादिविवाहोढ़ायाः सपिण्डीकरणविचारः | ७७९ | ६ |
| आहतलक्षणम् ... ... ... | १४५ | ६ |
| आह्निकप्रकरणम् ... ... ... | २०५ | १ |

## ई।


| विषयः। | | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|---|
| ईश्वरस्य फलप्रदत्वम् | ... | ... | २०० | ७ |


## उ।


| | | | | |
|---|---|---|---|---|
| उच्छिष्टसन्निधिपदार्थनिरूपणम् | | ... | १५१ | १६ |
| उत्सर्जनम् ... | ... | ... | ५२१ | १२ |
| उपनयनप्रकरणम् ... | ... | ... | ४४६ | १ |
| उपनयनादूर्द्धं त्रिरात्रं ब्रह्मचर्य्याचरणेनापि ब्रह्मचर्य्याश्रमनिर्वाहः | ... | ... | ५७२ | ८ |
| उपसंग्रहणलक्षणम् | ... | ... | ३०० | १० |
| उपाकर्म्मणो गृहस्थादिकर्त्तव्यता | | ... | ५२० | ११ |
| उपाकर्म्मविधिः ... | ... | ... | ५१८ | १२ |
| उपाकर्म्मेतिकर्त्तव्यता | ... | ... | ५२१ | ६ |
| उपाकर्म्मोत्सर्जनप्रशंसा | ... | ... | ५२२ | ८ |
| उपाध्यायलक्षणम् ... | ... | ... | ३०४ | १६ |


## ऊ।


| | | | | |
|---|---|---|---|---|
| ऊनमासिकस्य कालविकल्पाः ... | | ... | ७७१ | ४ |
| ऊनषाण्मासिकादीनां कालः ... | | ... | ७७० | १७ |
| ऊनानां वर्ज्यकालः | ... | ... | ७७१ | ६ |
| ऊर्द्धपुण्ड्रमन्त्राः ... | ... | ... | २४७ | १२ |
| ऊर्द्धपुण्ड्रविधिः ... | ... | ... | २४६ | १२ |


## ऋ।


| | | | | |
|---|---|---|---|---|
| ऋतुकालानभिगमनदोषापवादः ... | | ... | ५०५ | १५ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
| --- | --- | --- |
| ऋषिभेदेन चूड़ानियमः ... ... | ४४४ | २ |

## ए।

| | | |
| --- | --- | --- |
| एकोद्दिष्टस्य त्रैविध्यम् ... ... | ७६८ | १२ |
| एकोद्दिष्टलक्षणम् ... ... | ७६८ | ४ |

## औ।

| | | |
| --- | --- | --- |
| औदुम्बरवानप्रस्थलक्षणम् ... ... | ५७३ | ३ |
| औरसपुत्रस्यानुपनीतस्यापि दाहाद्यधिकारः ... | ७८६ | १० |

## क।

| | | |
| --- | --- | --- |
| कदर्य्यलक्षणम् ... ... ... | ७१५ | १२ |
| कन्यादातारः ... ... ... | ४८७ | २ |
| कन्यादोषाः ... ... ... | ४६०<br>४६१ | १८<br>१६ |
| कन्याया आन्तराणि लक्षणानि ... | ४६३ | १५ |
| कन्याया बाह्यलक्षणानि ... ... | ४६२ | १७ |
| कन्यायाः सद्यद्दानविचारः ... ... | ४६० | ३ |
| कन्यालक्षणम् ... ... ... | ४८२ | ८ |
| कन्याशब्दस्यार्थः ... ... ... | ४८४ | १४ |
| करग्रहणप्रकारः ... ... ... | ४०४ | ३ |
| कर्म्माङ्गश्राद्धम् ... ... ... | ७३१ | ७ |
| कलावाचारप्रायश्चित्तयोः सङ्कोचविचारः ... | २० | ७ |
| कलौ वर्ज्यानि ... ... ... | १२३ | ५ |

| विषयः । | पृष्ठ । | पङ्क्ती । |
|---|---|---|
| काल्यस्वरूपं तद्भेदाश्च ... ... | ८४ | ८ |
| कामार्थाधिवेदनम् ... ... | ५०८ | १६ |
| काम्यकर्म्मणो मोक्षसाधनत्वाभावः ... | ५४ | १२ |
| काम्यश्राद्धकालाः ... ... ... | ६५७ | ७ |
| काम्यस्नानम् ... ... ... | २६० | १ |
| कालविशेषेणातिक्रान्ताशौचविशेषः ... | ५६८ | १ |
| कुटीचरलक्षणम् ... ... ... | ५७३ | १० |
| कुटीचरस्य वृत्तिविशेषाः ... ... | ५४४ | ३ |
| कुतपलक्षणम् ... ... ... | ७२१ | १२ |
| कुलगुणाः ... ... ... | ६८२ | ८ |
| कृतचूड़मरणेऽशौचम् ... ... | ६०४ | १४ |
| कृतोद्वाहस्योपगमनियमः ... ... | ४६७ | ३ |
| कृषिनिन्दा ... ... ... | ४३२ | ८ |
| कृषीवलस्य तिलादिविक्रयनिषेधः ... | ४३० | ११ |
| कृषीवलस्य देयधान्यपरिमाणम् ... | ४३४ | १० |
| कृषीवलस्य धान्यदानस्यावश्यकत्वम् ... | ४३३ | १७ |
| कृषौ फलितस्य धान्यस्य विनियोगः ... | ४२६ | १८ |
| कृषौ वर्ज्याबलीवर्द्दाः ... ... | ४२७ | १८ |
| कृषौ बलीवर्द्दसंख्या ... ... | ४२७ | १४ |
| कृषौ विहितबलीवर्द्दाः ... ... | ४२८ | ४ |
| कृष्युत्पन्नपापप्रतीकारः ... ... | ४३३ | ८ |
| क्रियाङ्गस्नानम् ... ... ... | २६३ | १५ |
| क्रियास्नानम् ... ... ... | २६४ | १ |
| क्रोशलक्षणम् ... ... ... | ५६५ | १८ |
| क्षत्रियधर्म्माः ... ... ... | ३८६ | १५ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| क्षारादीनां भस्मनि होमः ... ... | ३४० | १० |

## ग।

| | | |
|---|---|---|
| गजच्छायालक्षणम् ... ... | ६५६ | १७ |
| गण्डूषविधिः ... ... ... | २१८ | १० |
| गयाश्राद्धनिरूपणम् ... ... | ६५५ | ७ |
| गर्भस्रावगर्भपातयोरशौचम् ... ... | ६०३ | १० |
| गर्भस्रावगर्भपातयोर्लक्षणे ... ... | ६०३ | १८ |
| गर्भस्रावाशौचम् ... ... ... | ६०१ | १७ |
| गर्भाधानादीनां कालविशेषाः ... ... | ४३७ | १४ |
| गान्धर्वादिविवाहोढायाः पितृगोत्रेण पिण्डोदककरणम् | ४६८ | १३ |
| गायत्रब्रह्मचारिलक्षणम् ... ... | ५७२ | ८ |
| गुणाद्यनुसारेणाशौचसङ्कोचस्तत्तत्कर्मस्वेव न सर्व्वकर्म्मसु | ५८५ | ८ |
| गुणानुसारेणाशौचसङ्कोचः ... ... | ५८४ | १२ |
| गुरवः ... ... ... | ३०२ | १३ |
| गुरुपूजाप्रकरणम् ... ... ... | ३३६ | १ |
| गुरुपुत्रस्योच्छिष्टभक्षणनिषेधः ... ... | ५५७ | ६ |
| गृहस्थद्वैविध्यम् ... ... ... | ३०८ | १० |
| गृहस्थानामपि मुक्तिः ... ... | ५२ | ६ |
| गृहस्थानां चातुर्विध्यम् ... ... | ५७२ | १३ |
| गृहिणां पलाशपत्रे भोजननिषेधः ... | ३६६ | १ |
| गोत्रनिरूपणम् ... ... ... | ४७६ | १ |
| गोत्रप्रवर्त्तकामुनयः ... ... | ४७६ | ८ |
| गोत्रभेदेऽपि प्रवरैक्यम् ... ... | ४७६ | ३ |
| गोत्राणामवान्तरभेदाः ... ... | ४७६ | १४ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| गोत्रैक्येऽपि प्रवरभेदः ... ... | ३७६ | ६ |
| गौर्य्यादिसंज्ञानिर्णयः ... ... | ४८२ | १६ |
| ग्रन्थानुक्रमणिका ... ... ... | १२ | ३ |
| ग्रन्थारम्भः ... ... ... | ३२ | ६ |
| ग्रहणे भोजननिषेधः ... ... | ३८१ | १५ |
| ग्रहणे श्राद्धकालः ... ... ... | ६५७ | २ |
| ग्राममध्ये शवस्थितौ ग्रामस्याशौचम् ... | ६१३ | ८ |

## घ।

| | | |
|---|---|---|
| घोरसंन्यासकारकस्य लक्षणम् ... ... | ५७२ | २० |

## च।

| | | |
|---|---|---|
| चण्डालाद्यग्नेरग्राह्यत्वम् ... ... | ६२६ | १३ |
| चतुर्थभागकर्त्तव्यम् ... ... | ३११ | २ |
| चतुर्थाश्रमनिरूपणम् ... ... | ५३२ | १३ |
| चतुर्दश्यां महालयश्राद्धस्यैकोद्दिष्टत्वम् ... | ६७० | २० |
| चूड़ाकरणम् ... ... ... | ४४३ | १५ |

## ज।

| | | |
|---|---|---|
| जननाशौचेऽङ्गास्पृश्यत्वाभावः ... ... | ५८१ | १६ |
| जननाशौचे पितुः स्नानादस्पृश्यत्वनिवृत्तिः ... | ५८२ | ७ |
| जननाशौचे सूतिकाया अस्पृश्यत्वम् ... | ५८२ | १ |
| जननेऽतिक्रान्ताशौचाभावः ... ... | ५६६ | २१ |
| जन्मदाख्यानां देवतानां पूजनेऽशौचाभावः ... | ५८३ | १४ |

| विषयः। | | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|---|
| जन्मदिने दानादावशौचाभावः ... | | ... | ५८२ | २१ |
| जपयज्ञभेदानां लक्षणानि | ... | ... | २८० | २१ |
| जपयज्ञस्य भेदाः ... | ... | ... | २८० | १७ |
| जपसंख्यानियमः ... | ... | ... | २८३ | १९ |
| जपसंपत्तिहेतवः ... | ... | ... | २८१ | १५ |
| जर्त्तिललक्षणम् ... | ... | ... | ७२१ | ३ |
| जलस्थस्य तर्पणे विशेषः | ... | ... | २४२ | ६ |
| जातकर्म्मकालः ... | ... | ... | ४३९ | ११ |
| जातश्राद्धादि हेम्ना कार्य्यम् | ... | ... | ४४० | ५ |
| जातश्राद्धे पक्वान्ननिषेधः | ... | ... | ४४० | ८ |
| जातिभेदप्रकरणम् | ... | ... | ५११ | १० |
| जातिभेदेन ऋतुधारणकालभेदः | | ... | ५०४ | १० |
| जारोपपत्योर्भेदः ... | ... | ... | ६९२ | १४ |
| जीवत्पितृकस्य तर्पणे विशेषः ... | | ... | ३२३ | १ |
| ज्ञानकर्म्मणोः समुच्चयः | ... | ... | २९१ | १६ |


---

## त।


| | | | | |
|---|---|---|---|---|
| तर्पणपात्राणि ... | ... | ... | ३१८ | १ |
| तर्पणविधिः ... | ... | ... | ३१५ | ६ |
| तर्पणीयाः ... | ... | ... | ३२० | ३ |
| तर्पणे तिलानां वर्णभेदेन विनियोगविशेषः ... | | | ३१९ | ४ |
| तिलतर्पणनिषेधः ... | ... | ... | ३१९ | १० |
| तृतीयभागकर्त्तव्यम् | ... | ... | ३०८ | १ |
| त्रिरात्राशौचे दशपिण्डदानप्रकारः | | ... | ६४२ | ६ |


---

## द ।


| विषयः । | | | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|---|
| दण्डस्य चतुर्विधत्वम् | ... | ... | ३९८ | १४ |
| दण्डस्य दश स्थानानि | ... | ... | ३९९ | ३ |
| दन्तधावनविधिः ... | ... | ... | २३२ | १० |
| दन्तजन्मविषये व्यवस्था | ... | ... | २२६ | ५ |
| दर्भविधिः ... | ... | ... | २३५ | ८ |
| दशाहमध्ये दर्शपाते कर्त्तव्यनिर्णयः | | ... | ६४३ | ३ |
| दानप्रकरणम् ... | ... | ... | १६४ | ६ |
| दानप्रशंसा ... | ... | ... | १६४ | ७ |
| दानस्वरूपदानेतिकर्त्तव्यते | ... | ... | १६६ | १९ |
| दाहानन्तरं तर्पणम् | ... | ... | ६४० | १२ |
| दिनक्षयलक्षणम् ... | ... | ... | १८० | १० |
| दिनच्छिद्रलक्षणम् | ... | ... | १८० | १३ |
| दिवामैथुननिषेधः ... | ... | ... | ४९७ | १५ |
| दुर्गभेदाः ... | ... | ... | ४०६ | १३ |
| दुर्गसंविधानप्रकारः | ... | ... | ४०६ | १६ |
| दुर्मृतानामुदकदानाद्यभावः | ... | ... | ५९१ | ३ |
| दुर्मृतानां नारायणबलिः | ... | ... | ५९३ | ३ |
| दुर्मृतानां वत्सरादूर्द्ध्वमौर्द्ध्वदेहिककरणम् | | ... | ५९३ | २ |
| देवतानां फलदातृत्वम् | ... | ... | १९७ | १२ |
| देवतापूजाकालः ... | ... | ... | २९४ | ७ |
| देवतास्वरूपनिरूपणप्रकरणम् ... | | ... | १९२ | ६ |
| देवलकलक्षणम् ... | ... | ... | १७५ | ३ |
| देवललक्षणम् ... | ... | ... | ६८९ | १७ |
| देवार्चनप्रकरणम् ... | ... | ... | ३२६ | १४ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| देशान्तरमृतस्य मरणादिनाज्ञानेऽशौचग्रहणप्रकारः | ६०० | १८ |
| देशान्तरमृतस्याशौचम् ... ... | ५९५ | ३ |
| देशान्तरलक्षणम् ... ... ... | ५९५ | ७ |
| दौहित्रभागिनेयमरणाशौचम् ... ... | ६०९ | १४ |
| द्रव्यार्जनस्य पुरुषार्थत्वम् ... ... | १६० | १ |
| द्विजातीनां वासोपयोगिदेशः ... ... | ५२२ | १४ |
| द्विजादिसृष्टिप्रयोजनम् ... ... | १५० | १६ |
| द्विजानां गर्भाधानादिसंस्काराणां समन्त्रकत्वम् | ४३७ | १० |
| द्वितीयभागकृत्यम् ... ... | ३०६ | १४ |
| द्विराचमननिमित्तानि ... ... | २२५ | ६ |

ध।

| | | |
|---|---|---|
| धर्मस्य बहुविधत्वम् ... ... | ७४ | १ |
| धर्मशास्त्राध्ययनविधिः ... ... | १४३ | ५ |
| धर्मस्य स्थूलसूक्ष्मत्वभेदेन द्वैविध्यम् ... | ८१ | १७ |
| धर्मस्वरूपविषये मतभेदाः ... ... | ७९ | २ |
| धर्माचारयोर्भेदः ... ... ... | १३० | ६ |
| धर्मार्थंशववहने सद्यः शौचम् ... ... | ६३० | १५ |
| धर्मार्थाधिवेदनम् ... ... | ५०८ | १५ |

न।

| | | |
|---|---|---|
| नग्नलक्षणम् ... ... ... | २४५ | १४ |
| नवमिश्रश्राद्धम् ... ... ... | ७६९ | ११ |
| नवश्राद्धम् ... ... ... | ७६८ | ३ |
| नामकरणकालः ... ... ... | ४४० | १९ |

| विषयः । | | | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|---|
| नामधारकविप्रलक्षणम् | ... | ... | ५८६ | ८ |
| नामधेयस्वरूपम् ... | ... | ... | ४४१ | ११ |
| निकृष्टजातिशवानुगमनाशौचम् | | ... | ६३५ | १७ |
| नित्यकर्मणां द्वैविध्यम् | ... | ... | ५५ | १० |
| नित्यकर्मलोपे प्रायश्चित्तम् | ... | ... | १५६ | ११ |
| नित्यकाम्ययोर्भेदः ... | ... | ... | ५४ | ६ |
| नित्यनैमित्तिककाम्यानि | ... | ... | १५४ | २ |
| नित्यश्राद्धम् ... | ... | ... | ३४४ | २ |
| नित्यानामङ्गहान्याऽप्यनुष्ठानम् ... | | ... | १५७ | ८ |
| निराकृतिलक्षणम् | ... | ... | ६८३ | २ |
| निविच्छब्दार्थः ... | ... | ... | १८४ | ५ |
| निष्क्रमणम् ... | ... | ... | ४४२ | ८ |
| नैमित्तिकश्राद्धम् ... | ... | ... | ७३१ | १५ |
| नैमित्तिकश्राद्धानां बहूनामप्येकदिने करणम् ... | | | ७८५ | १० |
| नैमित्तिकस्नानम् ... | ... | ... | २५७ | ८ |
| नैष्ठिकब्रह्मचारिधर्म्माः | ... | ... | ४५८ | ३ |


## प ।


| | | | | |
|---|---|---|---|---|
| पङ्क्तिपावनब्राह्मणाः | ... | ... | ६८० | १२ |
| पञ्चमपुरुषादावशौचाल्पत्वम् | ... | ... | ५८८ | १४ |
| पञ्चमादावपि क्वचित् सापिण्ड्यनिवृत्तिः | | ... | ५८८ | ७ |
| पत्न्याः पार्व्वणाधिकारः | ... | ... | ७८१ | २ |
| परमहंसवृत्तिः ... | ... | ... | ५४६ | १५ |
| परमहंसलक्षणम् ... | ... | ... | ५७३ | १५ |
| पराशरमाधवकारिका | ... | ... | १३ | ३ |

| विषयः। | | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|---|
| पराशरशब्दार्थनिर्वचनम् | ... | ... | ६७ | ८ |
| परिवेत्तृपरिवित्त्योर्लक्षणम् | ... | ... | ६६० | ६ |
| परिवेदनविचारः ... | ... | ... | ६६० | ६ |
| परिव्राजकानां चातुर्विध्यम् | ... | ... | ५७१ | ८ |
| पाकयज्ञादयः ... | ... | ... | १५३ | ८ |
| पाङ्क्तेयब्राह्मणाः ... | ... | ... | ६८२ | ८ |
| पापरोगाः ... | ... | ... | ६८६ | १० |
| पारमहंस्यस्य वैधत्वविचारः | ... | ... | ५४६ | १६ |
| पार्व्वणैकोद्दिष्टसन्निपाते निर्णयः | | ... | ७६५ | ६ |
| पिण्डदानाधिकारिणः | ... | ... | ६४२ | १० |
| पिण्डदाने द्रव्यनियमः | ... | ... | ६४२ | २१ |
| पिण्डनिर्वपणकालः ... | ... | ... | ७५२ | ६ |
| पिण्डनिर्वपणेतिकर्त्तव्यता | ... | ... | ७५३ | १ |
| पितुर्ज्येष्ठभ्रातुश्चोच्छिष्टभोजनम् ... | | ... | ४५७ | ५ |
| पितुः श्रोत्रियत्वेन पुत्रस्य श्रैष्ठम् | | ... | ६७८ | ३ |
| पितृतर्पणे क्रमः ... | ... | ... | ३२२ | ११ |
| पितृमातृमरणे वर्षमध्येऽन्यश्राद्धकरणविचारः | | | ७६२ | ५ |
| पितृमातृश्राद्धयोः कालैक्ये पौर्वापर्य्यनिर्णयः ... | | | ७६३ | ११ |
| पितृयज्ञः ... | ... | ... | ३४३ | १६ |
| पित्रादिशवनिर्हरणे ब्रह्मचारिणोदोषाभावः ... | | | ६३३ | १२ |
| पित्रादौ विदेशस्थे मृते विशेषः ... | | ... | ५६६ | ३ |
| पित्रोर्मरणे विवाहितस्त्रीणामशौचम् | | ... | ६०६ | १० |
| पित्र्यदक्षिणादाने प्राचीनावीतित्वम् | | ... | ७५७ | १६ |
| पुत्रिकायाः पितृगोत्रत्वम् | ... | ... | ४७५ | १३ |
| पुनर्भूनिरूपणम् ... | ... | ... | ४६४ | ४ |

| विषय । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|
| पुंसवनकालः ... ... ... | ४३८ | ६ |
| पुंस्त्वपरीक्षोपायः ... ... ... | ४८० | २ |
| पुराणश्राद्धम् ... ... ... | ७६६ | १२ |
| पूर्व्वसङ्कल्पितद्रव्येऽशौचाभावः ... ... | ६२० | ११ |
| पूर्व्वसङ्कल्पितपक्कद्रव्ये विशेषः ... ... | ६२० | २१ |
| पोष्यवर्गः ... ... ... | ३०८ | ७ |
| प्रकृतप्रसवकालः ... ... ... | ६०३ | २० |
| प्रतिग्रहप्रकरणम् ... ... ... | १८२ | ११ |
| प्रत्याब्दिकश्राद्धनिरूपणम् ... ... | ७६५ | १० |
| प्रत्याब्दिकश्राद्धे पार्व्वणैकोद्दिष्टविधिकत्वविचारः | ७६५ | १४ |
| प्रदोषनिर्णयः ... ... ... | १४७ | ६ |
| प्रमादतोऽम्न्यादिमृतानामशौचादि ... | ५६३ | १५ |
| प्रयोजनलोपे पदार्थस्यानुष्ठानम् ... | ६३६ | ६ |
| प्रलयभेदनिरूपणम् ... ... | ८५ | ६ |
| प्रवरनिरूपणम् ... ... ... | ४७५ | १८ |
| प्राकृतप्रलयनिरूपणम् ... ... | ८६ | ४ |
| प्राजापत्यब्रह्मचारिलक्षणम् ... ... | ५७२ | ८ |
| प्राणायामलक्षणम् ... ... | २७० | १३ |
| प्राणाहुतिकल्पः ... ... ... | ३६७ | २ |
| प्रातःसन्ध्याकालः ... ... ... | २६६ | १७ |
| प्रातःसायंसन्ध्ययोर्गौणकालः ... ... | २७० | १ |
| प्रेतनिर्हरणे ब्रह्मचारिणो व्रतलोपः ... | ६३१ | ६ |
| प्रेतपिण्डसंख्या ... ... ... | ६४१ | २२ |
| प्रेतस्योदकदानानन्तरं पिण्डदानम् ... | ४४१ | १६ |
| प्रेतानुगमनविधिः ... ... ... | ६३८ | २० |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| प्रेतानुगमनाशौचम् ... ... | ६३५ | १ |


## फ।

| | | |
|---|---|---|
| फेनपवानप्रस्थलक्षणम् ... ... | ५७३ | ८ |



## ब।

| | | |
|---|---|---|
| बहूदकलक्षणम् ... ... ... | ५७३ | ११ |
| बहूदकस्य वृत्तिविशेषाः ... ... | ५४५ | १ |
| बहूनां पत्नीनामृतुयौगपद्ये ऽपगमक्रमनियमः | ५०४ | ५ |
| बालखिल्यलक्षणम् ... ... | ५७३ | ४ |
| बालमरणाशौचम् ... ... | ५६५ | १६ |
| बृहद्ब्रह्मचारिलक्षणम् ... ... | ५७२ | १३ |
| ब्रह्मचारिणां चातुर्विध्यम् ... ... | ५७२ | ७ |
| ब्रह्मचारिणां द्वैविध्यम् ... ... | ४५८ | २ |
| ब्रह्मचारिणां वर्ज्यानि ... ... | ४५६ | ८ |
| ब्रह्मचार्य्यादीनामशौचाभावः ... ... | ६१३ | १७ |
| ब्रह्मयज्ञविधिः ... ... ... | ३११ | ५ |
| ब्राह्मब्रह्मचारिलक्षणम् ... ... | ५७२ | १० |
| ब्राह्मणलक्षणम् ... ... ... | १०४ | १ |
| ब्राह्मणस्य भेषजवृत्तिनिषेधः ... ... | ४८६ | १५ |
| ब्राह्मणस्यापि कृषिकर्म्म ... ... | ४२६ | ७ |
| ब्राह्मणस्यासाधारणोधर्म्मः ... ... | १३५ | ११ |
| ब्राह्मणादीनामपि पैशाचविवाहः ... | ४८७ | १२ |
| ब्राह्मण्या सह भोजनविचारः ... ... | ३७३ | ४ |
| ब्राह्ममुहूर्त्तकृत्यम् ... ... | २०६ | ५ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| ब्राह्मणादिविवाहाः ... ... | ४८५ | १८ |
| ब्राह्मणादिविवाहोढ़ाया भर्तृगोत्रेण पिण्डोदकदानम् | ४६९ | ११ |

भ।

| | | |
|---|---|---|
| भक्तिमार्गस्य षड्दर्शनानि ... ... | ३२७ | १६ |
| भाद्रपदापरपक्षश्राद्धम् ... ... | ६६३ | २ |
| भाद्रपदापरपक्षश्राद्धस्य गौणकालः ... | ६६७ | ६ |
| भाद्रपदापरपक्षश्राद्धस्य पञ्चम्यादिकल्पाः ... | ६६६ | ५ |
| भाद्रपदापरपक्षस्य कन्यार्कान्वितत्वेन प्रशस्तत्वम् | ६६५ | १ |
| भाद्रपदापरपक्षस्य महालयगजच्छायासंज्ञे ... | ६६४ | १ |
| भाद्रपदापरपक्षे एकदिनेऽपि श्राद्धम् ... | ६६७ | १ |
| भाद्रपदापरपक्षे पञ्चम्यादिकल्पे चतुर्दशीवर्जनम् | ६६६ | १८ |
| भाद्रपदापरपक्षे भ्रात्रादीनामेकोद्दिष्टम् ... | ६७१ | १८ |
| भाद्रपदापरपक्षे षोड़शतिथिषु श्राद्धम् ... | ६६४ | ३ |
| भाद्रपदापरपक्षे सकृत् श्राद्धकरणे वर्ज्यदिनानि | ६६८ | ११ |
| भिक्षादिलक्षणानि ... ... | ३४७ | ९ |
| भिक्षुकाः ... ... ... | ३६२ | १ |
| भिन्नजातीयानां सापिण्ड्यम् ... ... | ५८९ | १ |
| भूतयज्ञः ... ... ... | ३४१ | ४ |
| भृग्वग्निमरणविधिः ... ... | ५९४ | ६ |
| भैक्षस्य पञ्चविधत्वम् ... ... | ५६४ | १५ |
| भोजनपात्रस्य यन्त्रिकायामारोपणम् ... | ३६६ | १० |
| भोजनपात्राणि ... ... ... | ३६५ }<br>७२१ } | १३ }<br>१६ } |
| भोजनप्रकरणम् ... ... ... | ३६३ | १८ |

| विषयः। | | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|---|
| भोजनविधेरुदीच्याङ्गानि | ... | ... | ३७७ | १८ |
| भोजने ग्राससंख्या | ... | ... | ३७० | ४ |
| भोजनेतिकर्त्तव्यता | ... | ... | ३६४ | १३ |
| भोजने मौनविचारः | ... | ... | ३७५ | १ |

## म।

| | | | | |
|---|---|---|---|---|
| मघात्रयोदशीश्राद्धविचारः | ... | ... | ६६८ | २१ |
| मघात्रयोदशीश्राद्धे पिण्डनिषेधः | | ... | ६७० | १ |
| मङ्गलवीक्षणादि ... | ... | ... | २६४ | १८ |
| मत्स्येषु भक्ष्याः ... | ... | ... | ७१७ | १८ |
| मधुरादिरसानां भोजनक्रमः | ... | ... | ३६६ | १७ |
| मध्यमपिण्डप्रतिपत्तिः | ... | ... | ७५८ | १७ |
| मध्याह्नसन्ध्याकालः | ... | ... | २७५ | ६ |
| मनुष्ययज्ञः ... | ... | ... | ३४६ | १८ |
| मन्त्राणामृष्यादिज्ञानम् | ... | ... | १६२ | १ |
| मन्वादयः ... | ... | ... | १४६ / ६५८ | १ / ७ |
| मलापकर्षणस्नानम् | ... | ... | २६२ | ५ |
| महाव्यतीपातलक्षणम् | ... | ... | ६५६ | १२ |
| मातामहादिमरणाशौचम् | ... | ... | ६०६ | २० |
| मातामहादिश्राद्धाधिकारनिर्णयः | | ... | ७६० | १२ |
| मातुलकन्याविवाहविचारः | ... | ... | ४६६ | १७ |
| मातृसपिण्डीकरणविचारः | ... | ... | ७७७ | ६ |
| मातुः सपिण्डीकरणे गोत्रनियमः | | ... | ७८० | ५ |
| माध्याह्निकस्नानम् | ... | ... | २५० | २ |

| विषयः । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|
| मानसपापप्रायश्चित्तम् ... ... | १२८ | ११ |
| मासिकश्राद्धानां विघ्नेन मुख्यकालेऽकरणे मासान्तरे तत्तिथौ करणम् ... ... | ६७३ | ११ |
| माहिषिकलक्षणम् ... ... | ६६४ | ५ |
| मांसभक्षणविचारः ... ... | ७१८ | २२ |
| मांसेषु वर्ज्यानि ... ... ... | ७१६ | २२ |
| मुख्यकल्पसम्भवेऽनुकल्पस्याननुष्ठानम् ... | ६८४ | १४ |
| मूत्रपुरीषोत्सर्गः ... ... ... | २०८ | १२ |
| मृतभार्य्यस्य पुनर्विवाहाभावे संन्यासः ... | ५३६ | ३ |
| मृताहे आमश्राद्धनिषेधः ... ... | ६७६ | १ |
| मृत्युविशेषेणाशौचविशेषः ... ... | ६२५ | १५ |


## य ।


| विषयः । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|
| यजनप्रकरणम् ... ... ... | १४६ | १६ |
| यज्ञोपवीतप्रकरणम् ... ... | ४४८ | १० |
| यज्ञोपवीतस्य कायादुद्धरणनिषेधः ... | ४५१ | १ |
| यज्ञोपवीतादीनां त्रोटनादौ प्रतिपत्तिः ... | ४५१ | ७ |
| यतिधर्म्मः ... ... ... | ५५७, ५६६ | ४, १ |
| यतीनां सपिण्डननिषेधः ... ... | ७८१ | ११ |
| यमतर्पणम् ... ... ... | ३२३ | २१ |
| यवागूपाकन्यायः ... ... ... | २०५ | ६ |
| याजनप्रकरणम् ... ... ... | १५६ | ७ |
| यायावरगृहस्थलक्षणम् ... ... | ५७२ | १८ |
| यावज्जीवाधिकरणम् ... ... | १०८ | ६ |

| विषयः। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|
| यावज्जीवाशौचबोधकवाक्यस्य निन्दार्थवादत्वम् | ५८७ | ६ |
| युगादयः … … … | १४६ / ६५७ | ६ / १६ |
| युद्धकालादि … … … | ३९९ | १९ |
| युद्धजयानन्तरकृत्यम् … … | ४०३ | ८ |
| युद्धप्रकारः … … … | ४०२ | १ |
| युद्धमृत्युप्रशंसा … … … | ६२६ | ४ |
| योजनलक्षणम् … … … | ५९५ | १८ |

## र।

| | | |
|---|---|---|
| रसविनिमये विशेषः … … | ४३१ | ७ |
| रसादीनां रसान्तरादिभिर्विनिमयः … | ४३१ | ४ |
| राज्ञोदिनचर्य्या … … … | ४०९ | १७ |
| रात्रौ वैश्वदेवः … … … | ३८६ | ९ |
| रुद्राणां नामानि … … … | ३२१ | १० |
| रोगादौ नित्यकर्म्माकरणे दोषाभावः … | १२९ | ७ |

## ल।

| | | |
|---|---|---|
| लिङ्गापेक्षया श्रुतेः प्राबल्यविचारः … | २७६ | १६ |

## व।

| | | |
|---|---|---|
| वदरिकाश्रममाहात्म्यम् … … | ६२ | ९ |
| वयोऽवस्थाविशेषेणाशौचविशेषः … | ६०६ | ३ |
| वरदोषाः … … … | ४९० | १६ |
| वर्णचतुष्टयस्य साधारणधर्म्मः … … | ४२४ | ५ |

